असौभाग्या च सौभाग्यं षण्मासश्रवणाल्लभेत् । नवमासं काकवन्ध्या मृतवत्सा च भक्तितः
स्तोत्रराजं या शृणोति सा पुत्रं लभते ध्रुवम् । कन्यामाता पुत्रहीना पञ्चमासं शृणोति या
घटे संपूज्य दुर्गां च सा पुत्रं लभते ध्रुवम् ॥ ७६ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० परशुरामकृतदुर्गास्तोत्रं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

=====

अथ षट्चत्वारिंशोऽध्यायः ।

---

**नारायण उवाच—**

स्तुत्वा तां परशुरामोऽसौ हर्षसंफुल्लमानसः । स्तोत्रेण हरिणोक्तेन स तुष्टाव गणाधिपम्
पूजां चकार भक्त्या च नैवेद्यैर्विविधैरपि । धूपैर्दीपैश्च गन्धैश्च पुष्पैश्च तुलसीं विना ॥२॥
संपूज्य भ्रातरं भक्त्या स रामः शंकराज्ञया । गुरुपत्नीं गुरुं नत्वा गमनं कर्तुमुद्यतः ॥३॥

**नारद उवाच—**

पूजां भगवतश्चक्रे रामो गणपतेर्यदा । नैवेद्यैर्विविधैः पुष्पैस्तुलसीं च विना कथम् ॥४॥
तुलसी सर्वपुष्पाणां मान्या धन्या मनोहरा । कथं पूजा सारभूता न गृह्णाति गणेश्वरः ॥

**नारायण उवाच—**

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् । ब्रह्मकल्पस्य वृत्तान्तं निगूढं च मनोहरम् ॥
एकदा तुलसी देवी प्रोद्भिन्ननवयौवना । तीर्थं भ्रमन्ती तपसा नारायणपरायणा ॥ ७ ॥
ददर्श गङ्गातीरे सा गणेशं यौवनान्वितम् । अतीव सुन्दरं शुद्धं सस्मितं पीतवाससम्
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् । ध्यायन्तं कृष्णपादाब्जं जन्ममृत्युजरापहम् ॥
जितेन्द्रियाणां प्रवरं योगीन्द्राणां गुरोर्गुरुम् । अरूपहार्यं निष्कामं सकामा तमुवाच ह ॥

**तुलस्युवाच—**

अहो ध्यायसि किं देव शान्तरूप गजानन । कथं लम्बोदरो देहो गजवक्त्रं कथं तव ॥
एकदन्तः कथं वक्त्रे वदामुत्र च कारणम् । त्यज ध्यानं महाभाग सायंकाल उपस्थितः
इत्युक्त्वा तुलसी देवी प्रजहास पुनः पुनः । परं चेतसि दग्धा सा कामबाणैः सुदारुणैः
गणेशस्य प्रधानाङ्गे दत्त्वा किंचिज्जलं मुने । जघान तर्जन्यग्रेण निष्पन्दं कृष्णमानसम् ॥
बभूव ध्यानभङ्गं च तस्य नारद चेतनम् । दुःखं च ध्यानभेदेन तद्विच्छेदो हि शोकदः
ध्यानं त्यक्त्वा हरिं स्मृत्वा चापश्यत्कामिनीं पुरः । नवयौवनसंपन्नां सस्मितां कामपीडिताम्
लम्बोदरश्च तां दृष्ट्वा परं विनयपूर्वकम् । उवाच सस्मितः शान्तः शान्तां कामातुरां वशी

गणेश्वर उवाच—

का त्वं वत्से कस्य कन्या मातर्मां ब्रूहि किं शुभे । पापदोऽशुभदः शश्वद्ध्यानभङ्गस्तपस्विनाम् ॥ १८ ॥

कृष्णः करोतु कल्याणं हन्तु विघ्नं कृपानिधिः । तद्ध्यानभङ्गजाद्दोषान्नाशुभं स्यात्तु ते शुभे ॥

गणेशवचनं श्रुत्वा तमुवाच स्मरातुरा । सस्मितं सकटाक्षं च देवं मधुरया गिरा ॥

तुलस्युवाच—

धर्मात्मजस्य कन्याऽहमप्रौढा च तपस्विनी । तपस्या मे स्वामिनोऽर्थे त्वं स्वामी भव मे प्रभो ॥

तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन् । तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥

गणेश उवाच—

हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे । दारग्रहो हि दुःखाय न सुखाय कदाचन ॥

हरिभक्तेर्व्यवायश्च तपस्यानाशकारकः । मोक्षद्वारकपाटश्च भवबन्धनपाशकः ॥२४॥

गर्भवासकरः शश्वत्तत्त्वज्ञाननिकृन्तकः । संशयानां समारम्भो यस्त्याज्यो वृषलेऽपि ॥

गेहोऽहंकरणानां च सर्वमायाकरण्डकम् । साहसानां समूहश्च दोषाणां च विशेषतः ॥

निवर्तस्व महाभागे पश्यान्यं कामुकं पतिम् । कामुकेनैव कामुक्याः संगमो गुणवान्भवेत् ॥

इत्येवं वचनं श्रुत्वा कोपात्सा तं शशाप ह । दाराश्ते भविताऽसाध्वी गणेश्वर न संशयः ॥

इत्याकर्ण्य सुरश्रेष्ठस्तां शशाप शिवात्मजः । देवि त्वमसुरग्रस्ता भविष्यसि न संशयः ॥

तत्पश्चान्महतां शापाद्वृक्षस्त्वं भवितेति च । महातपस्वीत्युक्त्वा तां विरराम च नारद ॥

शापं श्रुत्वा तु तुलसी सा रुरोद पुनः पुनः । तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम् ॥

गणेश्वर उवाच—

पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे । कलांशेन महाभागे स्वयं नारायणप्रिया ॥

प्रिया त्वं सर्वदेवानां श्रीकृष्णस्य विशेषतः । पूता विमुक्तिदा नॄणां मया भोग्या न नित्यशः ॥

इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः । हरेराराधनव्यग्रो बदरीसंनिधिं ययौ ॥

जगाम तुलसी देवी हृदयेन विदूयता । निराहारा तपश्चक्रे पुष्करे लक्षवर्षकम् ॥३५॥

पश्चान्मुनीन्द्रशापेन गणेशस्य च नारद । सा प्रिया शङ्खचूडस्य बभूव सुचिरं मुने ॥

ततः शंकरशूलेन स ममारासुरेश्वरः । सा कलांशेन वृक्षत्वं ययौ नारायणप्रिया ॥

कथितश्चेतिहासस्ते श्रुतो धर्ममुखात्पुरा । मोक्षदश्च सारश्च पुराणेन प्रकीर्तितः ॥३८॥

ततः परशुरामोऽसौ जगाम तपसे वनम् । प्रणम्य शंकरं दुर्गां संपूज्य च गणेश्वरम् ॥३९॥

पूजितो वन्दितः सर्वैः सुरेन्द्रमुनिपुंगवैः । पार्वतीशिवसांनिध्ये सुखं तस्थौ गणेश्वरः ॥
इदं गणपतेः खण्डं यः शृणोति समाहितः । स राजसूययज्ञस्य फलमाप्नोति निश्चितम् ॥
अपुत्रो लभते पुत्रं श्रीगणेशप्रसादतः । धीरं वीरं च धनिनं गुणिनं चिरजीविनम् ॥
यशस्विनं पुत्रिणं च विद्वांसं सुकवीश्वरम् । जितेन्द्रियाणां प्रवरं दातारं सर्वसंपदाम् ॥
सुशीलं च सदाचारं प्रशंस्यं वैष्णवं लभेत् । अहिंसकं दयालुं च तत्त्वज्ञानविशारदम् ॥
भक्त्या गणेशं संपूज्य वस्त्रालंकारचन्दनैः । श्रुत्वा गणपतेः खण्डं महावन्ध्या प्रसूयते ॥
मृतवत्सा काकवन्ध्या ब्रह्मन्पुत्रं लभेद्ध्रुवम् । अदुष्टा दूषणपरा शुद्धा चैव लभेत्सुतम् ॥
संपूर्णं ब्रह्मवैवर्तं श्रुत्वा यल्लभते फलम् । तत्फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमम् ॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्थितः । तस्मै ददाति सर्वेष्टं सुरश्रेष्ठो गणेश्वरः
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय यत्नतः । स्वर्णयज्ञोपवीतं च श्वेतच्छत्रं च मालिकम्
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकान् । परिपक्वफलान्येव देशकालोद्भवानि च ॥

इति श्रीब्रह्मवैवर्ते महापुराणे गणपतिखण्डे नारदनारायणसंवादे परशुरामगणेशतत्खण्डश्रवणफलवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

**समाप्तमिदं श्रीब्रह्मवैवर्तपुराणस्य तृतीयं महागणपतिखण्डम् ॥**

---

१ क. सुपवित्र स° ।